ॐ

# संस्कृत भारती

अक्षरम्, ८ उपमार्गः, २ घट्टः गिरिनगरम्, बेङ्गलूरु - ५६० ०८५.

# पत्रालयद्वारा संस्कृतम्

संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम्

## PARICHAYA -4

## PRAVESHA -4

## WHY PROPAGATION OF SAMSKRIT AND HOW ?

### Samskrit Slogans on Travel Bags

वदतु संस्कृतम् जयतु भारतम् ।
संस्कृतेन सम्भाषणं कुरु, जीवनस्य परिवर्तनं कुरु ।
संस्कृतं भारतस्य सांस्कृतिकभाषा ।

When we travel on a journey, we could have such slogans printed in bold letters on bags and trunks. The attention of fellow-passengers would naturally be drawn towards this subject.

### Samskrit Magazines on Journeys

People usually travel with magzines and books to read along the journey. We could take along magazines such as Chandamama, Sambhashana Sandesh,etc. When people exchange reading material as usually happens, they could develop interest in reading Samskrit and wish to learn Samskrit at a conversational level. In this way we could even help propagate Samskrit journals.

### Spoken-Samskrit-Hour at Home Everyday

Everday we could set aside an hour for speaking only in Samskrit . In most homes, there is a fixed time of day when all the members gather around for a meal. If we speak in Samskrit at this time, everyone would get an opportunity to hear. Slowly each member would be inspired to try speaking in Samskrit

Over time, we could try to increase the duration when the family should speak in Samskrit.

In every nighbourhood, the children gather to play in the evenings . We could teach them small shlokas, simple sayings, songs and rhymes in Samskrit. We could slowly teach them little puns and games in Samskrit and move onto simple storytelling. As childern are much quicker at grasping than adults, they would learn a lot more in a short time. When these children go home and talk about what they have learnt they would carry the interest in Samskrit to their families.

> *NOTE:*
> **The matters given in the inner pages of the cover are only for information. Questions on these points will not be asked in the exam.**



ॐ

जयतु संस्कृतम् - जयतु मनुकुलम्

*Victory of Samskrutam - Victory of mankind*

# संस्कृतभारती

## Samskrita Bhāratī

**पत्रालयद्वारा संस्कृतम्**

**Samskrit Through Correspondence**

'Aksharam' 8th cross, Girinagar II Phase,
Bangalore-560 085. Ph.: 6721052

## परिचयः - PARICHAYA

## चतुर्थः पाठः - FOURTH LESSON

**मनस्वी कार्यार्थी न गणयति दुःखं, न च सुखम् ।**

A bold person aiming for accomplishing the end does not take into account either distress or delight.

### १. विभक्तीनां परिचयः

**चतुर्थीविभक्तिः (Dative case)**

(The meaning of this case is 'to' or 'for', eg. रामाय to Rama.)

| | पुंलिङ्गः | स्त्रीलिङ्गः | नपुंसकलिङ्गः |
|---|---|---|---|
| अकारान्तः - | रामाय-रामेभ्यः | - - | ज्ञानाय-ज्ञानेभ्यः |
| आकारान्तः - | - - | रमायै-रमाभ्यः | - - |
| इकारान्तः - | हरये-हरिभ्यः | मत्यै / मतये } -मतिभ्यः | दध्ने-दधिभ्यः |
| ईकारान्तः - | - - | नद्यै-नदीभ्यः | - - |
| उकारान्तः - | गुरवे-गुरुभ्यः | धेनवे-धेनुभ्यः | मधुने-मधुभ्यः |

सर्वनाम 'अस्मत्' शब्दः- मह्यम्-अस्मभ्यम्

सर्वनाम 'युष्मत्' शब्दः- तुभ्यम्-युष्मभ्यम्

## प्रेरणा

| | परस्मैपदम् | | आत्मनेपदम् | |
|---|---|---|---|---|
| | ए.व. | ब.व | ए.व. | ब.व. |
| प्र.पु. | पश्यतु | पश्यन्तु | मोदताम् | मोदन्ताम् |
| म.पु. | पश्य | पश्यत | मोदस्व | मोदध्वम् |
| उ.पु. | पश्यानि | पश्याम | मोदै | मोदामहै |

**Sentences with Dative Forms -**

१. वैद्यः [a]रुग्णाय[1] औषधं यच्छति ।

२. धनिकः [b]निर्धनाय धनं यच्छतु ।

३. लेखकः पत्रिकायै[2] लेखं लिखतु ।

४. कवयः कीर्त्यै काव्यं लिखन्तु ।

५. स्त्रियः उद्योगाय[c] स्पर्धन्ताम् ।

६. ऐश्वर्यम् अहङ्काराय[3] भवति ।

७. शक्तिः परपीडनाय भवति ।

८. शक्तिः परोपकाराय भवतु ।

९. विद्या विवादाय मा भवतु ।

१०. विद्या ज्ञानाय[d] कल्पताम् ।

११. लक्ष्मीः पण्डिताय[4] असूयति ।

१२. त्वं चतुराय असूयसि ।

१३. नृपतयः शत्रुभ्यः[4] कुप्यन्तु ।

१४. पूतना हरये कुप्यति ।

१५. शिष्यः गुरवे[4] द्रुह्यति ।

१६. [e]विक्रयिकः [f]ग्राहकाय [g]द्रुह्यति ।

१७. मोदकं तुभ्यं[5] रोचते वा ?

१८. पुष्पाणि तरुणीभ्यः रोचन्ते ।

१९. संस्कृताभ्यासः मह्यं बहु रोचते ।





२०. गुरवे नमः, नारायणाय नमः ।

२१. अग्नये नमः, [h]श्रुत्यै नमः ।

२२. प्रजाभ्यः[6] स्वस्ति, सर्वेभ्यः स्वस्ति, शिशुभ्यः स्वस्ति ।

२३. अतिथयः गृहाय[7] आगच्छन्तु ।
(अतिथयः गृहम् आगच्छन्तु ।)

२४. गोविन्दः नगर्यै गच्छति ।
(गोविन्दः नगरीं गच्छति ।)

२५. अहं ग्रामाय गच्छामि ।
(अहं ग्रामं गच्छामि ।)

[a. रुग्णः - Patient b. निर्धनः - poor c. स्पर्धन्ताम् - compete. d. कल्पताम् - be effective (for) e. विक्रयिकः - Seller f. ग्राहकः - Customer g. द्रुह्यति - bear malice. h. श्रुतिः - Veda

**Some rules pertaining to the Dative case-**

1. The word denoting the person to whom something is given, gets the Dative case. Ex. The doctor gives the medicine to the patient. To whom? To the patient. (रुग्णाय).
2. The word denoting the purpose for which a certain action is taken, gets the Dative case. Ex. Let the writer write for the paper. Write for what? For the Paper. (पत्रिकायै)
3. The word denoting the object into which another object has transformed, gets the Dative case. Ex. Wealth turns into egoism. Turns into what? Into egoism. (अहङ्काराय)
4. The word denoting the person or thing against whom or which anger or hatred is shown, is in the Dative case.

   Ex.a. Lakshmi is jealous of the learned. Against whom? Against the learned. (पण्डिताय)

   b. Let the kings be angry towards the enemies. (शत्रुभ्यः)

   c. The pupil bears malice against the teacher. (गुरवे)

5. When verbs meaning 'liking' are used, the word denoting the person to whom it is a matter of liking is in the Dative case. Ex. Sweet meats are to the liking of the girl. To whom they are of liking? To the girl. (बालिकायै)

6. When the word नमः, स्वस्ति are used, the words denoting the object of their reference are in the Dative case.
   Ex. a. Salutations to the teacher. Salutations to whom? To the teacher. (गुरवे)
   b. Welfare to the subjects. Welfare to whom? To the subjects. (प्रजाभ्यः)

7. When verbs meaning 'going' or 'coming' are used the words denoting the destination may be in the dative case as well as in the Accusative case.
   Ex. a. Let the guests come to the house. (गृहाय/गृहम्)
   b. The friend goes to the city. (नगर्यै / नगरीम्)

**प्रश्नाः**

A) १. कः कस्मै औषधं यच्छति ? २. शक्तिः कस्मै भवतु ?
३. का पण्डिताय असूयति ? ४. कस्मै नमः ?
५. कः कस्यै गच्छति ? ६. तुभ्यं किं रोचते ?

B) Write sentences using the following words in the dative case.
१. जनकः २. वृक्षः ३. लता ४. पुष्पाणि ५. नार्यः ६. नगरी ७. अहम् ८. त्वम् ९. शिशवः १०. श्रुतिः

C) Translate the following into Samskrit -
1. Let the deer go for food. (i.e., in search of food)
2. I go to market.
3. Rivers flow for the good of others.
4. The teacher is angry towards the pupils.
5. Salutations to the father.





## २. चाटुश्लोकः

Sri Rama went to the forest along with Sita and Lakshmana. Then Guha helped him to cross the Ganges. Guha had heard of Sri Rama's feet converting the stone form of Ahalya into her human form. When Sri Rama was about to enter the boat, Guha said -

**क्षालयामि तव पादपङ्कजं नाथ ! दारुदृषदोः किमन्तरम् ।**
**मानुषीकरणचूर्णमस्ति ते पादयोरिति कथा प्रथीयसी ॥**

"Lord ! I wash your lotus-feet. What is the difference between the wood and the stone? Well spread is the account that there is a powder in your feet to convert anything into a human form." Guha means to say that the boat too, would turn into a woman.

## ३. समस्या

**एकोना विंशतिः स्त्रीणां स्नानार्थं सरयूं गता ।**
**विंशतिः पुनरायाता एको व्याघ्रेण भक्षितः ॥**

The apparent meaning of the stanza is: Nineteen women went to Sarayu for bath. Twenty women returned. One was eaten by the tiger. Nineteen women went. Those that returned were twenty. Besides one was eaten by the tiger. How could it be? Here the problem regarding number is to be solved. Would you try?

## ४. सुभाषितम्

**स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् ।**
**कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ॥**

**पदविभागः -**

स्वभावम्, न, जहाति, एव, साधुः, आपद्गतः, अपि, सन्, कर्पूरः, पावकस्पृष्टः, सौरभम् , लभतेतराम् ।

**तात्पर्यम् -**

A good person never gives up his nature even when he is caught in a calamity. Camphor caught with fire emits more fragrance.

## ५. पदसङ्ग्रहः

स्था = To stand

१. तिष्ठति, २. स्थीयते, ३. स्थास्यति

४. स्थातव्यम्-स्थानीयम्, ५. स्थितः-स्थिता-स्थितम्, ६. स्थितवान्-स्थितवती, ७. तिष्ठन्-तिष्ठन्ती, ८. स्थित्वा-आस्थाय (प्रस्थाय= getting started) ९. स्थातुम् ।

क्षाल् = To wash

१. क्षालयति, २. क्षाल्यते, ३. क्षालयिष्यति

४. क्षालयितव्यम्-क्षालनीयम्, ५. क्षालितः-क्षालिता-क्षालितम्, ६. क्षालितवान्-क्षालितवती, ७. क्षालयन्-क्षालयन्ती, ८. क्षालयित्वा-प्रक्षाल्य, ९. क्षालयितुम् ।

लिख् = To write

१. लिखति, २. लिख्यते ३. लेखिष्यति

४. लेखितव्यम्-लेखनीयम्, ५. लिखितः-लिखिता-लिखितम्, ६. लिखितवान्- लिखितवती, ७. लिखन्-लिखन्ती-लिखती, ८. लिखित्वा-विलिख्य, ९. लेखितुम् ।

नृत् = To Dance.

१. नृत्यति, २. नृत्यते, ३. नर्तिष्यति

४. नर्तितव्यम्-नर्तनीयम्, ५. नर्तितः-नर्तिता-नर्तितम्, ६. नर्तितवान्-नर्तितवती ७. नृत्यन्-नृत्यन्ती, ८. नर्तित्वा-परिनृत्य, ९. नर्तितुम् ।

पच् = To cook

१. पचति, २. पच्यते, ३. पक्ष्यति

४. पक्तव्यम्-पचनीयम्, ५. पक्वः-पक्वा-पक्वम्, ६. पक्ववान्-पक्ववती, ७. पचन्-पचन्ती, ८. पक्त्वा-परिपच्य, ९. पक्तुम्

वन्द् = To salute.

१. वन्दते, २. वन्द्यते, ३. वन्दिष्यते

४. वन्दितव्यम्-वन्दनीयम्, ५. वन्दितः-वन्दिता-वन्दितम्, ६. वन्दितवान्-वन्दितवती, ७. वन्दमानः*-वन्दमाना ८. वन्दित्वा-अभिवन्द्य, ९. वन्दितुम् ।





The seventh form of the atmanepadin verbs get आन. (in some case मान)

Write sentences using the above forms.

## ६. काव्यकथा

### -रघुदेवेन्द्रयोः युद्धम्-

बालकः रघुः दिने दिने वर्धितः । सः योग्यं शिक्षणम् अपि प्राप्तवान् । विवाहः अपि सम्पन्नः । दिलीपः राज्यभारं लघुं कर्तुम् अपेक्षितवान् । अतः सः रघुकुमारस्य पट्टाभिषेकं कृतवान् । ततः शतम् अश्वमेधयागान् कर्तुं सङ्कल्पितवान् । शतेन अश्वमेधैः देवेन्द्रपदवी लभ्यते । दिलीपेन अश्वमेधयागाय यागाश्वाः प्रेषिताः । अश्वानां रक्षणाय रघुः गतः । एकोनशतं (९९) यागाः निर्विघ्नाः जाताः । अन्तिमस्य यागस्य अश्वः प्रेषितः । धनुर्धराः रक्षकाः आसन् । परन्तु देवेन्द्रः तत्र आगतः । सः गुप्तशरीरं धृतवान् । अश्वम् अपहृतवान् । रघुराजस्य सैन्यम् आश्चर्यचकितम् अभवत् । किं कर्तव्यम् इति न ज्ञातम् ।

तदा तत्र वसिष्ठस्य नन्दिनीधेनुः आगतवती । सा अनुग्रहं कृतवती । तेन पूर्वदिशायाम् इन्द्रः दृष्टः । रघुः इन्द्रम् उद्दिश्य अवदत्- ''देवेन्द्र ! त्वं देवेषु प्रथमः । अश्वस्य अपहरणं हीनं कार्यम् । इदं त्वया न कर्तव्यम् । तव अपकीर्तिः भवति । अश्वं त्यज'' इति ।

इन्द्रः रघुं दृष्ट्वा- ''राजकुमार ! कीर्तिः एव मुख्या । अहम् एकः 'शतक्रतुः' इति प्रसिद्धः । अन्यः शतक्रतुः लोके नास्ति । यदि तव जनकः शतम् अश्वमेधान् करिष्यति तर्हि सः शतक्रतुः भविष्यति । अतः अहम् अश्वम् अपहृतवान्'' इति अकथयत् ।

रघुः इदं वचनं श्रुत्वा- ''यदि आग्रहः शस्त्रं गृह्यताम्'' इति अवदत् । रघु-देवेन्द्रयोः भीकरं युद्धं जातम् । रघुः बाणं गृहीतवान् । क्षिप्तवान् । इन्द्रस्य भुजे चिह्नं जातम् । इन्द्रः कुपितवान् । वज्रायुधेन रघुं ताडितवान् । रघुः भूमौ पतितवान्, क्षणे एव उत्थितवान् च ।

रघुकुमारस्य पराक्रमेण इन्द्रः सन्तुष्टवान् । इन्द्रः- ''वरं याचय, अश्वं तु न ददामि'' इति अकथयत् । रघुः- ''अश्वं विना अपि यागः पूर्णः भवतु, यागफलं

च भवतु'' इति प्रार्थितवान् । इन्द्रः 'तथास्तु' इति वरं दत्तवान् । सन्तुष्टः रघुः राजधानीं प्रत्यागतवान् ।

## Raghu-Devendra War

The boy Raghu grew day by day. He received the appropriate education. He was married too. Dilipa thought of lessening the burden of the administration of kingdom. Hence he performed the coronation of Raghu. Then he proposed to perform a hundred horse-sacrifices. Devendra's position could be got by the performance of a hundred horse-sacrifice. Dilipa sent the sacrificial horses for the horse sacrifice. Raghu went to guard the horses. Ninety-nine sacrifices went off without impediments. The horse of the last sacrifice was sent around. The archers were its guards. But Devendra came there. He assumed an invisible form. He stole the horse. Raghu's army became struck with wonder. It was not known as to what should be done.

Then Vasishtha's cow Nandini came there. She granted her favour. Indra was seen in the eastern quarter. Raghu said to Indra: 'Devendra! You are the first among the gods. Stealing a horse is a evil deed. You should not do it. You will get a bad name. Leave the horse.'

Indra said to Raghu - 'Prince! Fame itself is important. I am alone well-known as 'Shatakratu' (One who has performed a hundred sacrifices). There is no other 'Shatakratu' in the world. Your father will become 'Shatakratu' if he completes a hundred horse sacrifices. Hence, I have stolen the horse.'

Raghu heard this and said- 'If you are so stubborn take up your weapon. (i.e., get ready for a battle). There occurred terrible battle between Raghu and Indra. Raghu took up his arrow and discharged it. Indra had an injury on his arm. Indra





got angry and struck Raghu with his thunder bolt. Raghu fell on the ground and sprang up suddenly the next moment.

Indra was pleased with Raghu's valour. Indra said- 'Ask for a boon. However, I shall not return the horse.' Raghu asked- 'Let the sacrifice be completed even without the horse. Let the fruit of the sacrifice arise.' Indra granted the boon saying; 'So be it.' Being pleased, Raghu returned to his capital.

१. दिलीपः किं किं कर्तुम् अपेक्षितवान् ?
२. इन्द्रः कथं दृष्टः ?
३. इन्द्रम् उद्दिश्य रघुराजस्य वचनं किम् ?
४. इन्द्रः कं वरं दत्तवान् ?

### ७. अन्वयक्रमः

अथाथर्वनिधेस्तस्य विजितारिपुरः पुरः ।
अर्थ्यामर्थपतिर्वाचमाददे वदतां वरः ॥ ६ ॥

**पदविभागः -**

अथ, अथर्वनिधेः, तस्य, विजितारिपुरः, पुरः, अर्थ्याम्, अर्थपतिः, वाचम्, आददे, वदताम्, वरः ।

**अन्वयः -**

अथ, विजितारिपुरः, वदतां, वरः, अर्थपतिः, अथर्वनिधेः, तस्य, पुरः, अर्थ्याम्, वाचम्, आददे ।

**अन्वयार्थः -**

अथ - Afterwords (After Vasiśthas query) (Dilipa). विजितारिपुरः - who has vanquished the city of the enemy, वदतां वरः - who is the best orator, अर्थपतिः - who is the lord of all kinds of riches, अथर्वनिधेः - who is the very receptacle of Atharvaveda, तस्य पुरः - before him (Vasishtha) अर्थ्यां वाचम् - significant (meaningful) speech आददे - started.

तात्पर्यम् -

A Purohita is required to know expiatory and other rituals that are ordained in the Atharvaveda. Vasishtha, the family priest (purohita) of Dilipa is the very treasurehouse of the Veda. The monarch Dilipa too vanquishing all the enemies, has made all the riches his own. Dilipa is not only valourous but also a great orator. After Vasishtha's enquiry of well being Dilipa began to reply aptly.

उपपन्नं ननु शिवं सप्तस्वङ्गेषु यस्य मे ।
दैवीनां मानुषीणां च प्रतिहर्ता त्वमापदाम् ॥ ७ ॥

पदविभागः -

उपपन्नम्, ननु, शिवम्, सप्तसु, अङ्गेषु, यस्य, मे, दैवीनाम्, मानुषीणाम्, च, प्रतिहर्ता, त्वम्, आपदाम् ।

अन्वयः -

सप्तसु, अङ्गेषु, शिवम्, उपपन्नं, ननु, (यतः) यस्य मे दैवीनाम् च मानुषीणाम्, आपदाम्, प्रतिहर्ता, त्वम् ।

अन्वयार्थः -

सप्तसु अङ्गेषु - (As regards) constituent elements of the state. शिवम् - the well being उपपन्नं ननु - is it not befitting (यतः) - because यस्य मे - that me (the disciple of Vasishtha) दैवीनाम् - caused by gods, च - and, मानुषीणाम् - caused by men, आपदां प्रतिहर्ता - the remover of the adversities त्वम् - after all you are?

तात्पर्यम् -

King, minister, ally, treasure, territory, fortress and army - these are the seven elements of the state. Calamity may occur from both sides. The first calamity may be due to





the drought etc., caused by displeasure of Gods. The second calamity may occur due to the theft etc. by thieves and others. But both these calamities have no room in me, because after all you, the ominiscient ominipotent, are my family priest!

## ८. अनुवादपद्धतिः (Method of translation)

In the previous lesson we came to know that literal translation is the best type of translation during the initial stage of practice. We also know in this context that we must carefully follow the correct meaning of the word. Such words whose meanings are accordingly known are to be conjoined. This is another notable thing in translation.

Observe the following sentences–

| | |
|---|---|
| सः आगतवान् आसीत् । = | He had come |
| सा आगतवती आसीत् । = | She had come |
| लेखनी पतिता आसीत् । = | Pen had fallen |
| अहम् आगतवान् आसम् । = | I had come |
| सः आगतवान् अस्ति । = | He has come |
| सा आगतवती अस्ति । = | She has come |
| सः आगतवान् स्यात् । = | He must have come. |
| सा आगतवती स्यात् । = | She must have come. |
| लेखनी पतिता स्यात् । = | Pen must have fallen. |

In the above sentences the verbal forms आसीत्, अस्ति, स्यात् etc., are used along with the past participles. Translate the following sentences and practice more on the same lines.

१. सखी मिलितवती आसीत् । २. ह्यः दृष्टवान् आसम् ।
३. रामः लिखितवान् आसीत् । ४. त्वं श्रुतवान् आसीः वा ?
५. अहं प्रेषितवान् अस्मि । ६. करवस्त्रं पतितम् अस्ति ।
७. सः निद्रां न कृतवान् स्यात् ।

(सखी = Friend (fem), ह्यः = Yesterday, न कृतवान् स्यात् = might not have done.)

Translate the following sentences into Samskrit.

1. He had written a letter.
2. Had you come ?
3. I had read.
4. Sita has kept the book.
5. He might have gone.
6. I have written a letter to the teacher.
7. He might have had his meals.
8. She might not have washed the clothes.

## ९. सङ्ग्राह्यविषयाः

Certain groups that are famous as constituted by five–

पञ्चामृतम् - क्षीरम्, दधि, घृतम्, मधु, शर्करा ।

पञ्च कोशाः - अन्नमयः, प्राणमयः, मनोमयः, विज्ञानमयः, आनन्दमयः ।

पञ्च गव्यानि - क्षीरम्, दधि, घृतं, गोमूत्रं, गोमयम् ।

पञ्च नदाः - शतद्रुः, विपाशा, इरावती, चन्द्रभागा, वितस्ता ।

पञ्च प्राणाः - प्राणः, अपानः, व्यानः, उदानः, समानः ।

पञ्च देववृक्षाः - मन्दारः, पारिजातः, सन्तानः, कल्पवृक्षः, हरिचन्दनः ।





### Solution of the समस्या

एकोना विंशतिः - This means the number which is twenty less by one. i.e., nineteen. But it can also be split as एको ना विंशतिः । 'ना' means 'man'. Then one man and twenty women went for bath. The man was eaten by tiger. Twenty women returned.

❊ ❊ ❊

ॐ

# संस्कृतभारती

## पत्रालयद्वारा संस्कृतम्

### परिचयः

#### चतुर्थः पाठः

❁ ❁ ❁

#### प्रश्नाः

1. Write the Padavibhaga, Anvaya, Anvayartha and Tatparya of the following stanzas.

   १. उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
   न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥

   २. काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
   व्यसनेन तु मूर्खाणां निद्रया कलहेन वा ॥

2. लिख्, वन्द्- Give Krudanta form of these roots and write sentences using them.

3. दिलीपस्य शापवृत्तान्तः - Write this story in Samskrit.

## Treasure of Knowledge in Ancient India

*(Continued from previous lesson)*

### MEASUREMENT OF TIME IN INDIA

India is a very ancient land. Its culture, learning and scientific tradition are also very ancient. The mesurement of time had developed to a high level of sophistication in ancient India. From the folowing passage, we can see that the Indian concept of time was even finer than what has evolved in the West.

All gross bodies like the earth, are made up of independent, tiny, indivisible particles called Paramanus, which are not joined one with another. The sum total, in their natural state, of all gross bodies made up of such Paramanus or "atoms," is called ParamaMahaan. In the same way, time, which is intangible, can be inferred to have subtle intevals and longer intevals (indicating gradation in length, or size). The time associated with a tiny particle like परमाणु when it is formed, is very subtle, whereas the time that elapses from the begining of creation to its end (प्रलय), witnessing all the changes of the material world, is ParamaMahaan.

A unit of two Paramanus is called Anu अणु, three Anus join to form a 'त्रसरेणु'.The thrasarenu can be seen floating in the air like a speak of dust, in a beam of sunlight streaming through a narrow window.The time that the sun in its path takes to cross such a tiny 'त्रसरेणु' is called a 'त्रुटि' . A hundered 'त्रुटि's make a 'वेध.' Three vedhas form a 'लव' and three lavas make a 'निमेष'. Three 'निमेष's make a ' क्षण. Five क्षण's make a 'काष्ठा' and fifteen kashtas make a 'लघु.' Fifteen laghus make a 'नाडिका.' Two nadikas make a 'मुहूर्त'And as the day waxes and wanes, including dawn and dusk, six or seven nadikas make a 'प्रहर'.

